# शिवस्तुतिः १९.

स्फुटं स्फटिकसप्रभं स्फुटितहाटकश्रीजटं शशांकदलशेखरं कपिलफुल्लनेत्रत्रयम् ।त ग क्षुवरकृत्तिमद्भुजगभूषणं भूतिमत्कदानुशि।तकंठ ते वपुरवेक्ष्यते वक्षणम् ॥१। त्रिलोचनविलोचने लसति ते लला-

मायिते स्मरो नियमघस्मरो नियमिनामभून्द्रुस्म-
सात् ।। स्वभक्तिलतया वशीकृतवती सतीयं सती
स्वभक्तवशगो भवानपि वशी प्रसीद प्रभो ।।२।।
महेश महितोषि तत्पुरुषपूरुषाग्र्यो भवानघोररिपु
घोर तेनवम वामदेवांजलिः ।। नमः सपदि जात ते
त्वमिति पंचरूपोंचितः प्रपंचचयपंचवृन्मम मन-
स्तमस्ताडय ।।३।। रसाधनरसानलानिलवियद्वि-
वस्वद्विधुप्रयष्टृषु निविष्टमित्यज भजामि मूर्त्यष्ट-
कम् ।। प्रशांतमुत भीषणं भुवनमोहनं चेत्यहो
वपूंषि गुणपूंषि तेऽहमहमात्ममोहं भिदे ।। ४ ।।
विमुक्ति परमाध्वनां तव षडध्वनामास्पदं पदं
निगमवेदिनो जगति वामदेवादयः ।। कथंचिदुपशि-
क्षिता भगवतैव संविद्रते वयं सुविरलांतराः कथ-
मुमेश तन्मन्महे ।।५।। कठोरितकुठाग्र्या ललित-
शूलया बाहया रण डुमरया स्फुरद्धरिणया सखट्-
वांगया । चलाभिरचलाभि रप्यगणिताभिरुन्नृत्य-

तश्चतुर्दश जगंति ते जयजयेत्ययुर्विस्मयम् ।। ६ ।।
पुरत्रिपुररंधनं विविधदैत्यविध्वंसनं पराक्रमपरंपरा
अपि परा न ते विस्मयः ।। अमर्षबलहर्षितक्षुभित-
वृत्तनेत्रोज्वलज्ज्वलज्ज्वलनहेलया शं लभितं हि
लोकत्रयम् ।।७।। सहस्रनयनो गुहः सहसहस्ररश्मि-
विधुर्बृहस्पतिरुताप्पतिः ससुरसिद्धविद्याधराः ।।
भवत्पदपरायणाः श्रियमिमामयुः प्रार्थिनां भवा-
न्सुरतरुर्दृशं दिश शिवां शिवावल्लभ ।। ८ ।। तव
प्रियतमादतिप्रियतमं सदैवांतरं पयस्युपहितं घृतं
स्वयमिव श्रियो वल्लभम् ।। विभिद्य लघुबुद्धयः
स्वपरपक्षलक्षायितं पठंति हि लुठंति ते शठहृदः
शुचा लुंठिताः।।९।।निवासनिलयश्चिता तव शिर
स्तुतिर्मालिका कपालमपि ते करे त्वमशिवोप्यनंत-
धियाम्।।तथापि भवतः पदं शिवशिवेत्यदो जल्प-
तामकिंचन न किंचनवृजिनमस्त्यभस्मीभवत् ।१०।